# ॥ श्रीकृष्णस्तुतिः ॥

**कुंत्युवाच**

नमस्ये पुरुषं त्वाद्यमीश्वरं प्रकृतेः परं ।
अलक्ष्यं सर्वभूतानामंतर्बहिरवस्थितं ॥ १ ॥

मायाजवनिकाच्छन्नमज्ञाधोक्षजमव्ययं ।
न लक्ष्यसे मूढदृशा नटो नाट्यधरो यथा ॥ २ ॥

तथा परमहंसानां मुनीनाममलात्मनां ।
भक्तियोगविधानार्थं कथं पश्येमहि स्त्रियः ॥ ३ ॥

कृष्णाय वासुदेवाय देवकीनंदनाय च ।
नंदगोपकुमाराय गोविंदाय नमो नमः ॥ ४ ॥

नमः पंकजनाभाय नमः पंकजमालिने ।
नमः पंकजनेत्राय नमस्ते पंकजांघ्रये ॥ ५ ॥

यथा हृषीकेश खलेन देवकी
कंसेन रुद्धातिचिरं शुचार्पिता ।
विमोचिताहं च सहात्मजा विभो
त्वयैव नाथेन मुहुर्विपद्गणात् ॥ ६ ॥

विषान्महाग्नेः पुरुषाददर्शनादसत्सभाया वनवासकृच्छ्रतः ।
मृधे मृधेऽनेकमहारथास्त्रतो द्रौण्यस्त्रतश्चास्म हरेऽभिरक्षिताः ॥ ७ ॥

विपदः संतु नः शश्वत्तत्र तत्र जगद्गुरो ।
भवतो दर्शनं यत्स्यादपुनर्भवदर्शनं ॥ ८ ॥

जन्मैश्वर्यश्रुतश्रीभिरेधमानमदः पुमान् ।
नैवार्हत्यभिधातुं वै त्वामकिंचनगोचरं ॥ ९ ॥

नमोऽकिंचनवित्ताय निवृत्तगुणवृत्तये ।
आत्मारामाय शांताय कैवल्यपतये नमः ॥ १० ॥

मन्ये त्वां कालमीशानमनादिनिधनं विभुं ।
समं चरंतं सर्वत्र भूतानां यन्मिथः कलिः ॥ ११ ॥

न वेद कश्चिद्भगवंश्चिकीर्षितं
तवेहमानस्य नृणां विडंबनं ।
न यस्य कश्चिद्दयितोऽस्ति कर्हिचिद्द्वेष्यश्च
यस्मिन्विषमा मतिर्नृणां ॥ १२ ॥

जन्म कर्म च विश्वात्मन्नजस्याकर्तुरात्मनः ।
तिर्यङ्नृषिषु यादःसु तदत्यंतविडंबनं ॥ १३ ॥

गोप्याददे त्वयि कृतागसि दाम तावद्या
ते दशाश्रुकलिलांजनसंभ्रमाक्षं ।
वक्त्रं निनीय भयभावनया स्थितस्य
सा मां विमोहयति भीरपि यद्बिभेति ॥ १४ ॥

केचिदाहुरजं जातं पुण्यश्लोकस्य कीर्तये ।
यदोः प्रियस्यान्ववाये मलयस्येव चंदनं ॥ १५ ॥

अपरे वसुदेवस्य देवक्यां याचितोऽभ्यगात् ।
अजस्त्वमस्य क्षेमाय वधाय च सुरद्विषां ॥ १६ ॥

भारावतारणायान्ये भुवो नाव इवोदधौ ।
सीदंत्या भूरिभारेण जातो ह्यात्मभुवार्थितः ॥ १७ ॥

भवेऽस्मिन् क्लिश्यमानानामविद्याकामकर्मभिः ।
श्रवणस्मरणार्हाणि करिष्यन्निति केचन ॥ १८ ॥

शृण्वंति गायंति गृणंत्यभीक्ष्णशः
स्मरंति नंदंति तवेहितं जनाः ।
त एव पश्यंत्यचिरेण तावकं
भवप्रवाहोपरमं पदांबुजं ॥ १९ ॥

अप्यद्य नस्त्वं स्वकृतेहित प्रभो
जिहाससि स्वित्सुहृदोऽनुजीविनः ।
येषां न चान्यद्भवतः पदांबुजात्परायणं
राजसु योजितांहसां ॥ २० ॥

के वयं नामरूपाभ्यां यदुभिः सह पांडवाः ।
भवतोऽदर्शनं यर्हि हृषीकाणामिवेशितुः ॥ २१ ॥

नेयं शोभिष्यते तत्र यथेदानीं गदाधर ।
त्वत्पदैरंकिता भाति स्वलक्षणविलक्षितैः ॥ २२ ॥

इमे जनपदाः स्वृद्धाः सुपक्वौषधिवीरुधः ।
वनाद्रिनद्युदंवंतो ह्येधंते तव वीक्षितैः ॥ २३ ॥

अथ विश्वेश विश्वात्मंविश्वमूर्ते स्वकेषु मे ।
स्नेहपाशमिमं छिंधि दृढं पांडुषु वृष्णिषु ॥ २४ ॥

त्वयि मेऽनन्यविषया मतिर्मधुपतेऽसकृत् ।
रतिमुद्वहतादद्धा गंगेवौघमुदंवति ॥ २५ ॥

श्रीकृष्ण कृष्णसख वृष्ण्यृषभावनिध्रुग्राजन्यवंशदहनानपवर्गवीर्य ।
गोविंद गोद्विजसुरार्तिहरावतार योगेश्वराखिलगुरो भगवन्नमस्ते ॥ २६ ॥

॥ इति श्रीमद्भागवते महापुराणे प्रथमस्कंधे अष्टमेऽध्याये श्री कुंतीकृत कृष्णस्तुतिः संपूर्णः ॥